अर्हं

# श्रीनिरयावलिका सूत्रं

श्रीचन्द्रसूरिविरचितवृत्तिसहितम्

काशकः—श्रीविजयनीतिसूरीश्वरजी जैनपुस्तकालयस

कार्यवाहकः—श्रीयुत भोगीलाल सांकलचन्द.

इ. स. १९३८ प्रतयः १००० संवत्-१९९४

प्राचीन तीर्थोद्धारक श्रीमद्विजयनीतिसूरीश्वरेभ्यो नमः

श्री चन्द्रसूरिविरचितवृत्तियुतं

# श्री निरयावलिकासूत्रम् ॥

ॐ नमः श्रुतदेवतायै ॥ ते णं काले णं ते णं समए णं रायगिहे नामं नयरे होत्था, रिद्ध,

ॐ नमः श्रीशान्तिनाथदेवाय ॥ पार्श्वनाथं नमस्कृत्य, प्रायोऽन्यग्रन्थवीक्षिता । निरयावलिश्रुतस्कन्धे, व्याख्या काचित् प्रकाश्यते ॥१॥ तत्र निरयावलिकाख्यापाङ्गग्रन्थस्यार्थतो महावीर निर्गतवचनमभिधित्सुराचार्य सुधर्मस्वामी सूत्रकारः 'ते णं काले णं' इत्यादिग्रन्थं तावदाह–अत्र 'णं' वाक्यालङ्कारार्थ : । तस्मिन् काले–ऽवसर्पिण्याश्चतुर्थभागलक्षणे तस्मिन् समये–तद्विशेषरूपे यस्मिन् तन्नगरं राजगृहाख्यं राजा च श्रेणिकाख्यः सुधर्म (श्रीवर्धमान)स्वामी च 'होत्थ' त्ति अभवत्–आसीदित्यर्थः । अवसर्पिणीत्वात्कालस्य वर्णकग्रन्थवर्णित=विभूतियुक्तमिदानीं नास्ति । 'रिद्ध' इत्यनेन च नगरवर्णकः सूचितः, स च–" रिद्धत्थिमियसमिद्धं " भवनादिभि र्वृद्धिमुपगतं, भयवर्जितत्वेन स्थिरं, समृद्धं–धनधान्यादियुक्तं, ततः पदत्रयस्य कर्मधारयः । " पमुइयजणजाणवयं " प्रमुदिताः प्रमोदकारणवस्तूनां सद्भावात् जना–नगरवास्तव्यलोकाः जानपदाश्च–जनपदभवास्तत्रा-

(उत्तरपुरच्छिमे दिसीभाए) गुणसिलए, चेइए, वन्नओ, असोगवरपायवे पुढविसिलापट्टए ते णं काले णं ते णं समए णं समणस्स भगवओ महावीरस्स अंतेवासी अज्जसुहम्मे नामं अणगारे जातिसंपन्ने जहा केसि जाव

याताः सन्तो यस्मिन् तत् प्रमुदितजनजानपदम्। "उत्ताणनयणपेच्छणिज्जं" सौभाग्यातिशयात् उत्तानैः अनिमिषैः नयनैः-लोचनैः प्रेक्षणीयं यत्तत्तथा। "पासाईयं" चित्तप्रसत्तिकारि "दरिसणिज्जं" यत् पश्यच्चक्षुः श्रमं न गच्छति। 'अभिरूवं' मनोज्ञरूपम्। "पडिरूवं" द्रष्टारं द्रष्टारं प्रति रूपं यस्य तत्तथेति। तस्मिन् "उत्तरपुरच्छिमे दिसीभाए गुणसिलए नामं चेइए होत्था" चैत्यं-व्यन्तरायतनम् 'वन्नओ' त्ति चैत्यवर्णको वाच्यः-"चिराईए पुव्वपुरिसपन्नत्ते" चिरः-चिरकालः आदिः-निवेशो यस्य तत् चिरादिकम् अत एव पूर्वपुरुषैः-अतीतनरैः प्रज्ञप्तम्-उपादेयतया प्रकाशितं पूर्वपुरुषप्रज्ञप्तम्। "सच्छत्ते सज्झए सघंटे सपडागे कयवेयद्दीए" कृतवितर्दिकं-रचितवेदिकं "लाउल्लोइयमहिए" लाइय-यद्भूमेश्छगणादिना उपलेपनम्, उल्लोइयं-कुड्यमालानां सेटिकादिभिः संमृष्टीकरणं, ततस्ताभ्यां महितमिव महितं पूजितं यत्तत्तथेति। तत्र च गुणशिलकचैत्ये अशोकवरपादपः समस्ति, "तस्स णं हेट्ठा खंधासन्ने, एत्थ णं महं एगे पुढविसिलापट्टए पन्नत्ते, विक्खंभायामसुप्पमाणे आईणगरूयबूरनवणीयतूलफासे" आजिनकं-चर्ममयं वस्त्रं, रूतं-प्रतीत, बूरो-वनस्पतिविशेषः, नवनीत-म्रक्षणं, तूलम्-अर्कतूलं, तद्वत् स्पर्शो यस्य स तथा, कोऽर्थः? कोमलस्पर्शयुक्तः। 'पासाईए जाव पडिरूवे' त्ति। 'ते णं काले णं' इत्यादि, 'जाइसंपन्ने' उत्तममातृकपक्षयुक्त इति वक्तव्यम्, अन्यथा मातृकपक्षसंपन्नत्वं पुरुषमात्रस्यापि स्यात् इति नास्योत्कर्षः कश्चिदुक्तो भवेत्, उत्कर्षाभिधानार्थं चास्य विशेषणकलापोपादानं चिकीर्षितमिति। एवं "कुलसंपन्ने," नवरं कुलं-पैतृकः पक्षः। "बलसंपन्ने" बलं-संहननविशेषसमुत्थः प्राणः। 'जहा केसि' त्ति केसि (शि) वणको वाच्यः, स च "विणयसंपन्ने" लाघव

१ वाच्यविशेष० इति वा पाठः

पंचहिं अणगारसएहिं सद्धिं संपरिवुडे पुव्वाणुपुव्विं चरमाणे जेणेव रायगिहे नगरे जाव अहापडिरूवं उग्गहं ओगिण्हित्ता संजमेणं जाव

द्रव्यतोऽल्पोपधित्वं भावतो गैारवत्रयत्यागः एभिः संपन्नो यः स तथा। "ओयसी" ओजो-मानसोऽवष्टम्भः तद्वान् ओजस्वी, तेजः-शरीरप्रभा तद्वान् तेजस्वी, वचो-वचनं सौभाग्याद्युपेत यस्यास्तीति वचस्वी, "जससी" यशस्वी-ख्यातिमान्, इह विशेषणचतुष्टयेऽपि अनुस्वारः प्राकृतत्वात्। "जियकोहमाणमायालोभे" नवर क्रोधादिजयः उदयप्राप्तक्रोधादिविफलीकरणतोऽवसेयः। 'जीवियासामरणभयविप्पमुक्के' जीवितस्य-प्राणधारणस्य आशा-वाञ्छा मरणाच्च यद्भयं ताभ्यां विप्रमुक्तो जीविताशामरणभयविप्रमुक्तः तदुभयोपेक्षक इत्यर्थः। 'तवप्पहाणे' तपसा प्रधानः-उत्तमः शेषमुनिजनापेक्षया तपो वा प्रधानं यस्य स तपःप्रधानः। एवं गुणप्रधानोऽपि, नवरं गुणाः-संयमगुणाः। 'करणचरणप्पहाणे' चारित्रप्रधानः। 'निग्गहप्पहाणे' निग्रहो-अनाचारप्रवृत्तेर्निषेधनम्। 'घोरबंभचेरवासी' घोरं च तत् ब्रह्मचय च अल्पसत्वैर्दुःखेन यदनुचयते तस्मिन् घोरब्रह्मचर्यवासी। 'उच्छूढसरीरे' 'उच्छूढ' ति उज्झितमिव उज्झित शरीरं तत्सत्कारं प्रति निःस्पृहत्वात् (येन) स तथा। 'चोद्दसपुव्वी चउनाणोवगए' चतुर्ज्ञानोपयोगतः-केवलवर्जज्ञानयुक्तः। केसि (शि)गणधरो मतिश्रुतावधिज्ञानत्रयोपेत इति दृश्यम्। आचार्यः सुधर्मा पञ्चभिरनगारशतैः सार्धं-सह संपरिवृतः समन्तात्परिकलितः पूर्वानुपूर्व्या न पश्चानुपूर्व्या चेत्यर्थः क्रमेणेति हृदयं, चरन्-संचरन्। एतदेवाह-"गामाणुगामं दुइज्जमाणे" ति ग्रामानुग्रामश्च विवक्षितग्रामादनन्तरग्रामो ग्रामानुग्रामं तत् द्रवन्-गच्छन्-एकस्माद् ग्रामादनन्तरग्राममनुलङ्घयन्नित्यर्थः, अनेनाप्रतिबद्धं विहारमाह। तत्राप्यौत्सुक्याभावमाह-'सुहंसुहेणं विहरमाणे' सुखंसुखेन-शरीरखेदाभावेन संयमाऽऽबाधाभावेन च विहरन् ग्रामदिषु वा तिष्ठन्। 'जेणेव' त्ति यस्मिन्नेव देशे राजगृहं नगरं यस्मिन्नेव प्रदेशे गुणशिलकं चैत्य तस्मिन्नेव प्रदेशे उपागच्छति, उपागत्य यथाप्रतिरूपं-यथोचितं मुनिजनस्य अवग्रहम्-आवासम् अवगृह्य-अनुज्ञापनापूर्वकं गृहीत्वा संयमेन तपसा चात्मान भा-

विहरति। परिसा निग्गया। धम्मो कहिओ। परिसा पडिगया। ते णं काले ते णं समए णं अज्जसुहम्मस्स अणगारस्स अंतेवासी जंबू णामं अणगारे समचउरंससंठाणसंठिए जाव संखित्तविउलतेयलेस्से अज्जसुहम्मस्स अणगारस्स अदूरसामंते उड्ढंजाणू

वयन् विहरति-आस्ते स्म। 'परिसा निग्गय' त्ति परिषत्-श्रेणिकराजादिको लोकः निर्गता-निःसृता सुधर्मस्वामिवन्दनार्थम्। धर्मश्रवणानन्तरं "जामेव दिसिं पाउब्भूआ तामेव दिसिं पडिगय" त्ति यस्या दिशः सकाशात् प्रादुर्भूता-आगतेत्यर्थः तामेव दिशं प्रतिगता इति। तस्मिन् काले तस्मिन् समये आर्यसुधर्मणोऽन्तेवासी आर्यजम्बूनामाऽनगारः काश्यपगोत्रेण। 'सतुस्सेहे' सप्तहस्तोच्छ्रयः, 'समचउरंससठाणसंठिए' यावत्करणादिदं दृश्यं 'वज्जरिसहनारायसंघयणे कणगपुलगनिघसपम्हगोरे' कनकस्य-सुवर्णस्य 'पुलग' त्ति यः पुलको-लवः तस्य यो निकषः-कषपट्टरेखालक्षणः तथा 'पम्हेति' पद्मगर्भः तद्वत् यो गौरः स तथा, वृद्धव्याख्या तु-कनकस्य न लोहादेर्यः पुलकः-सारो वर्णातिशयः तत्प्रधानो यो निकषो-रेखा तस्य यत् पक्ष्म-बहलत्वं तद्वद्यो गौरः स कनकपुलकनिकषपक्ष्मगौरः। तथा 'उग्गतवे' उग्रम्-अप्रधृष्यं तपोऽस्येति कृत्वा। 'तत्ततवे' तप्तं-तापितं तपो येन स तप्ततपाः एवं तेनतपस्तप्तं येन कर्माणि संताप्य तेन तपसा स्वात्माऽपि तपोरूपः संतापित इति। तथा दीप्तं तपो यस्य स दीप्ततपाः, दीप्तं तु-हुताशन इव ज्वलत्तेजः कर्मवनदाहकत्वात्। 'उराले' उदारः-प्रधानः। 'घोरे' घोरः-निर्घृणः परीषहेन्द्रियकषायाख्यानां रिपूणां विनाशे कर्तव्ये। तथा 'घोरव्वए' घोराणि-अन्यैर्दुरनुचराणि व्रतानि यस्य स तथा। तथा घोरैस्तपोभिस्तपस्वी घोरतपस्वी। "संखित्तविउलतेयलेस्से" संक्षिप्ता-शरीरान्तर्निलीना विपुला-अनेकयोजनप्रमाणक्षेत्राश्रितवस्तुदहनसमर्था तेजोलेश्या-विशिष्टतपोजन्यलब्धिविशेषप्रभावा तेजोलेश्या (यस्य सः) एवं गुणविशिष्टो जम्बूस्वामी भगवान् आर्यसुधर्मणः स्थविरस्य "अदूरसामंते" ति दूरं-विप्रकर्षः सामन्तं-समीपम्, उभयोरभावोऽदूरसामन्तं (तस्मिन्) नातिदूरे नातिसमीपे उचिते देशे स्थित इत्यर्थः। कथं? 'उड्ढंजाणू'

जाव विहरति। तए णं से भगवं जंबू जातसड्ढे जाव पज्जुवासमणे एवं वयासि-उवंगाणं भंते! समणे णं जाव संपत्तेणं के अट्ठे पण्णत्ते? एवं खलु जंबू! समणेणं भगवया जाव संपत्तेणं एवं उवंगाणं पंच वग्गा पन्नता, तं जहा—

शुद्धपृथिव्यासनवर्जनात् औपग्रहिकनिषद्याभावाच्च उत्कटुकासनः सन्नपदिश्यते ऊर्ध्वे जानुनी यस्य स ऊर्ध्वजानुः, अधःशिराः अधोमुखः नोर्ध्व तिर्यग्वा निक्षिप्तदृष्टिः, किं तु नियतभूभागनियमितदृष्टिरिति भावना। यावत्करणात् 'झाणकोट्ठोवगए' ध्यानमेव कोष्ठो ध्यानकोष्ठस्तमुपगतो ध्यानकोष्ठोपगतः, यथाहि-कोष्ठके धान्य प्रक्षिप्तमविप्रकीण भवति एवं स भगवान् धर्मध्यानकोष्ठमनुप्रविश्य इन्द्रियमनांस्यधिकृत्य संवृतात्मा भवतीति भावः। संयमेन-संवरेण तपसा ध्यानेन आत्मानं भावयन्-वासयन् विहरति-तिष्ठति। 'तए णं से' इत्यादि, तत इत्यानन्त तस्माद् ध्यानादनन्तरं, ण इति वाक्यालङ्कारे, स आर्यजम्बूनामा उत्तिष्ठतीति सम्बन्धः, किम्भूतः सन्नित्याह-'जायसड्ढे' इत्यादि जाता-प्रवृत्ता श्रद्धा-इच्छा यस्य प्रष्टुं स जातश्रद्धः यद्वा जाता श्रद्धा-इच्छा वक्ष्यमाणवस्तुतत्वपरिज्ञानं प्रति यस्य स जातश्रद्धः। तथा जातः संशयोऽस्येति जातसंशयः, तथा जातकुतूहलः-जातौत्सुक्य इत्यर्थः विश्वस्यापि वस्तुव्यतिकरस्याङ्गेष भणनादुपाङ्गेषु कोऽन्योऽर्थो भगवताऽभिहितो भविष्यति? कथं च तमहमवभोत्स्ये? इति 'उट्ठाए उट्ठेइ' उत्थानमुत्था-ऊर्ध्व वर्तनं तया उत्तिष्ठति, उत्थाय च 'अज्जसुहम्मं थेरं तिक्खुत्तो आयाहिणपयाहिणं करेइ' त्ति त्रिः कृत्वः-त्रीन् वारान् आदक्षिणप्रदक्षिणां-दक्षिणपार्श्वादारभ्य परिभ्रमणतः (पुनः) दक्षिणपार्श्वप्राप्तिः आदक्षिणप्रदक्षिणा तां करोति-विदधाति, कृत्वा च वन्दते-वाचा स्तौति, नमस्यति-कायेन प्रणमति, 'नच्चासन्ने नाइदूरे' उचिते देशे इत्यर्थः। 'सुस्सूसमाणे' श्रोतुमिच्छन्। 'नमंसमाणे' नमस्यन्-प्रणमन्। अभिमुखं 'पंजलिउडे' कृतप्राञ्जलिः। विनयेन उक्तलक्षणेन 'पज्जुवासमाणे' पर्युपासनां विदधान एव इति वक्ष्यमाणप्रकारं 'वदासी' त्त अवादीत्-भगवता उपाङ्गानां पञ्च वर्गाः प्रज्ञप्ताः, वर्गोऽध्ययनसमुदायः, तद्यथेत्यादिना पञ्च वर्गान् दर्शयति-

निरयावलियाओ १ कप्पवडिंसियाओ २ पुप्फियाओ ३ पुप्फचूलियाओ ४ वण्हिदसाओ ५ । जइ णं भंते ! समणेणं जाव संपत्तेणं उवंगाणं पंच वग्गा पन्नत्ता तं जहा—निरयावलियाओ जाव वण्हिदसाओ पढमस्स णं भंते वग्गस्स उवंगाणं निरियावलियाणं समणेणं भगवया जाव संपत्तेणं कइ अज्झयणा पन्नत्ता ? एवं खलु जंबू ! समणेणं जाव संपत्तेणं उवंगाणं पढमस्स वग्गस्स निरयावलियाणं दस अज्झयणा पन्नत्ता, तं जहा—काले १ सुकाले २ महाकाले ३ कण्हे ४ सुकण्हे ५ तहा महाकण्हे ६ वीरकण्हे ७ य बोद्धव्वे रामकण्हे ८ तहेव य पिउसेणकण्हे ९ नवमे दसमे महासेणकण्हे १० उ । जइ णं भंते ! समणेणं जावसंपत्तेणं उवंगाणं पढमस्स० निरयावलियाणं दस अज्झयणा पन्नत्ता, पढमस्स णं भंते ! अज्झयणस्स निरयावलियाणं समणेणं जाव संपत्तेणं के अट्ठे पन्नत्ते ? एवं खलु जंबू । ते णं काले णं समए णं इहेव जंबुद्दीवे दीवे

---

"निरयावलियाओ कप्पवडिंसयाओ पुप्फियाओ पुप्फचूलियाओ वण्हिदसाओ" त्ति प्रथमवर्गो दशाध्ययनात्मकः प्रज्ञप्तः । अध्ययनदशकमेवाह-'काले सुकाले' इत्यादिना, मातृनामभिस्तदपत्यानां पुत्राणां नामानि, यथा काल्या अयमिति कालः कुमारः, एवं सुकाल्याः माहाकाल्याः कृष्णायाः सुकृष्णायाः महाकृष्णायाः वीरकृष्णायाः रामकृष्णायाः पितृसेनकृष्णायाः महासेनकृष्णायाः अयमित्येवं पुत्रनाम वाच्यम् । इह काल्या अपत्यमित्यस्मिन्नर्थे प्रत्ययो नोत्पाद्यः, काल्यादिशब्देभ्यस्तेऽथ प्रकृत्या कालसुकालादिनामसिद्धेः एवं चाद्यः कालः १, तदनु सुकालः २, महाकालः ३, कृष्णः ४, सुकृष्णः ५, महाकृष्णः ६, वीरकृष्णः७, रामकृष्णः८, पितृसेनकृष्णः ९, महासेनकृष्णः १० दशमः । इत्येवं दशाध्ययनानि निरयावलिकानामके प्रथमवर्गे इति ॥ 'एवं खलु जंबू ते णं काले णं' मित्यादि, इहेव 'इहेव त्ति देशतः प्रत्यक्षासन्ने न पुनरसङ्ख्येयत्वाज्जम्बूद्वीपानामन्यत्रेति

भारहे वासे चंपा नामं नयरी होत्था, रिद्ध, पुन्नभद्दे चेइए, तत्थ णं चंपाए नयरीए सेणियस्स रन्नो पुत्ते चेल्लणाए देवीअत्तए कूणिए नामं राया होत्था, महता, तस्स णं कूणियस्स रन्नो पउमावई नामं देवी होत्था, सोमाल जाव विहरइ।

भावः। भारते वर्षे-क्षेत्र चम्पा एवा नगरी अभूत्। रिद्धेत्यनेन 'रिद्धत्थिमियसमिद्ध' त्यादि दृश्यं, व्याख्या तु प्राग्वत्। तत्रोत्तरपुर्वदिग्भागे पूर्णभद्रनामकं चत्यं व्यन्तरायतनम्। 'कुणिए नामं राय' त्ति कूणिकनामा श्रेणिकराजपुत्रो राजा 'होत्थ' त्ति अभवत्। तद्वर्णको "महयाहिमवतमहंतमलयमंदरमहिंदसारेत्यादि पसंतडिंबडमरं रज्जं पसाहेमाणे विहरइ" इत्येतदन्तः, तत्र महाहिमवानिव महान् शेषराजापेक्षया, तथा मलयः-पर्वतविशेषो, मन्दरो-मेरुः, महेन्द्रः-शक्रादिदेवराजः, तद्वत्सारः-प्रधानो यः स तथा। तथा प्रशान्तानि डिम्बानि-विघ्ना डमराणि च-राजकुमारादिकृता विड्वरा यस्मिंस्तत्तथा (राज्यं) प्रसाधयन्-पालयन् विहरति-आस्ते स्म। कूणिकदेव्याः पद्मावतीनाम्न्या वर्णको यथा-'सोमाल जाव विहरइ' यावत्करणादेवं दृश्यम् "सुकुमालपाणिपाया अहीणपंचिंदियसरीरा" अहीनानि-अन्यूनानि लक्षणतः स्वरूपतो वा पञ्चापीन्द्रियाणि यस्मिंस्तत्तथाविधं शरीरं यस्याः सा तथा। "लक्खणवंजणगुणोववेया" लक्षणानि-स्वस्तिकचक्रादीनि व्यञ्जनानि-मषीतिलकादीनि तेषां यो गुणः-प्रशस्तता तेन उपपेता-युक्ता या सा तथा, उप अप इता इतिशब्दत्रयस्य स्थाने शकन्ध्वादिदर्शनात् उपपेतेति स्यात्। "माणुम्माणप्पमाणपडिपुन्नसुजायसव्वंगसुंदरंगी" तत्र मानं-जलद्रोणप्रमाणता, कथं? जलस्यातिभृते कुण्डे पुरुषे निवेशिते यज्जलं निःसरति तद्यदि द्रोणमानं भवति तदासौ पुरुषो मानप्राप्त उच्यते, तथा उन्मानम्-अर्द्धभारप्रमाणता, कथं? तुलारोपितः पुरुषो यद्यर्द्धभारं तुलयति तदा स उन्मानप्राप्त उच्यते, प्रमाणं तु स्वाङ्गुलेनाष्टोत्तरशतोच्छ्रायिता, ततश्च मानोन्मानप्रमाणैः प्रतिपूर्णानि-अन्यूनानि सुजातानि सर्वाणि अङ्गानि-शिरःप्रभृतीनि यस्मिंस्तत् तथाविधं सुन्दरम् अङ्गं-शरीरं यस्याः सा तथा। "ससिसोमाकारकंतपियदंसणा" शशिवत्सौम्याकारं कान्तं च-कमनीयम् अत एव प्रियं द्रष्टॄणां दर्शनं-रूपं यस्या सा तथा। अत एव सुरुपा स्वरुपत सा पद्मावती देवी 'कुणिएण सद्धिं उरालाइं

तत्थ णं चंपाए नयरीए सेणियस्स रन्नो भज्जा कूणियस्स रन्नो चुल्लमाउया काली नामं देवी होत्था, सोमाल जाव सुरूवा । तीसे णं कालीए देवीए पुत्ते काले नामं कुमारे होत्था, सोमाल जाव सुरूवे ।

---

भोगभोगाइं भुंजमाणी विहरइ' भोगभोगान्-अतिशयवद्भोगान् । 'तत्थ णं' इत्यादि । 'सोमालपाणिपाया' इत्यादि पूर्ववद्वाच्यम् । अन्यच्च "कोमुइरयणियरविमलपडिपुन्नसोमवयणा" कौमुदीरजनीकरवत्-कार्तिकीचन्द्र इव विमलं प्रतिपूर्ण सौम्यं च वदनं यस्याः सा तथा । 'कुंडलुल्लिहियगंडलेहा' कुण्डलाभ्यामुल्लिखिता-घृष्टा गण्डलेखा-कपोलविरचितमृगमदादिरेखा यस्याः सा तथा । 'सिंगारागारचारुवेसा' शृङ्गारस्य-रसविशेषस्य अगारमिव अगारं तथा चारुः वेषो-नेपथ्यं यस्याः सा तथा ततः कर्मधारयः । 'काली नाम देवी, श्रेणिकस्य भार्या कूणिकस्य राज्ञश्चुल्लजननी-लघुमाताऽभवत् । सा च काली "सेणियस्स रन्नो इट्ठा" वल्लभा कान्ता काम्यत्वात् 'पिया' सदा प्रेमविषयत्वात्, 'मणुन्ना' सुन्दरत्वात् 'नामधिज्जा' प्रशस्तनामधेयवतीत्यर्थः नाम वा धार्य-हृदि धरणीयं यस्याः सा तथा, 'वेसासिया' विश्वसनीयत्वात्, 'सम्मया' तत्कृतकार्यस्य संमतत्वात् 'बहुमता' बहुशो बहुभ्यो वाऽन्येभ्यः सकाशात् बहुमता बहुमानपात्रं वा, 'अणुमया' विप्रियकरणस्यापि पश्चात्मताऽनुमता । 'भंडकरंडकसमाणा' आभरणकरण्डकसमाना उपादेयत्वात् सुरक्षितत्वाच्च । 'तेल्लकेला इव सुसंगोविया' तैलकेला सौराष्ट्रप्रसिद्धो मृन्मयस्तैलस्य भाजनविशेषः, स च भङ्गभयात् लोचनभयाच्च सुष्ठु सङ्गोप्यते, एवं साऽपि तथोच्यते 'चेलापेडा इव सुसंपरिग्गहिया' वस्त्रमञ्जूषेवेत्यर्थः । 'सा काली देवी सेणिएण रन्ना सद्धिं विउला भोगभोगाइं भुंजमाणा विहरइ । कालनामा च तत्पुत्रः 'सोमालपाणिपाए' इत्यादि प्रागुक्तवर्णकोपेतो वाच्यः, यावत् 'पासाइए दरिसणिज्जे अभिरुवे पडिरुवे' इति पर्यन्तः । सेणियस्स रन्नो दुवे रयणा अट्ठारसवंको हारो १ सेयणगे हत्थीए २ । तत्थ किर सेणियस्स रन्नो जावइयं रज्जस्स मुल्लं तावइयं देवदिन्नहारस्स सेयणगस्स य गंधहत्थिस्स । तत्थ हारस्स उप्पत्ती पत्थावे कहिज्जिस्सइ । कूणियस्स य पत्थेव उप्पत्ती वित्थरेण भणिस्सइ, तत्कायण कालादीनां मरणसंभवात् आरम्भसङ्ग्रामतो नरकयोग्यकर्मोपचयविधानात् ।

नवरं कूणिकस्तदाकालाद्दिशकुमारान्वितश्चम्पायां राज्यं चकार, सर्वेऽपि च ते दोगुन्दुगदेवा इव कामभोगपरायणास्त्र-यस्त्रिंशाख्या देवाः फुट्टमाणेहिं मुइंगमत्थएहिं वरतरुणिसम्पिणिहिएहिं वत्तीसइपत्तनिवद्धेहिं नाडएहिं उवगिज्जमाणा भोग-भोगाइं भुंजमाणा विहरंति। हल्लविहल्लनामाणो कूणियस्स चिल्लणादेवीअंगजाया दो भायरा अन्नेऽवि अत्थि। अहुणा हारस्स उप्पत्ती भन्नइ-इत्थ सक्को सेणियस्स भगवंतं पइ निच्चलभत्तिस्स पसंसं करेइ। तओ सेडुयस्स जीवदेवो तब्भत्तिरंजिओ सेणियस्स तुट्ठो संतो अट्ठारसवंकं हारं देइ, दोन्नि य वट्टगोलके देइ। सेणिएणं सो हारो चेल्लणाए दिन्नो पिय त्ति काउं, वट्टदुगं सुनंदाए अभयमंतिजणणीए। ताए रुट्ठाए किं अ चेडरुव ति काउण अच्छोडिया भग्गा, तत्थ एगम्मि कुंडलजुयलं एगम्मि वत्थजुयलं तुट्ठाए गहियाणि। अन्नया अभओ सामिं पुच्छइ—'को अपच्छिमो रायरिसि' त्ति। सामिणा उद्दायिणो वागरिओ, अओ परं वद्धमउडा न पव्वयंति। ताहे अभएण रज्जं दिज्जमाणं न इच्छियं ति पच्छा सेणिओ चिंतेइ 'कोणियस्स दिज्जिहि' त्ति हल्लस्स हत्थी दिन्नो सेयणगो विहल्लस्स देवदिन्नो हारो, अभएण वि पव्वयंतेण सुनंदाए खोम-जुयलं कुंडलजुयलं च हल्लविहल्लाण दिन्नाणि। महया विहवेण अभओ नियजणणीसमेओ पव्वइओ। सेणियस्स चेलणादेवी-अंगसमुब्भूया तिन्नि पुत्ता कूणिओ हल्लविहल्ला य। कूणियस्स उप्पत्ती एत्थेव भणिस्सइ। कालीमहाकालीपमुहदेवीणं अन्नासिं तणया सेणियस्स वहवे पुत्ता कालपमुहा संति। अभयम्मि गहियव्वए अन्नया कोणिओ कालाईहिं दसहिं कुमारेहिं समं मंतेइ—'सेणियं सेच्छाविग्घकारयं वंधित्ता एक्कारसभाए रज्जं करेमो' त्ति, तेहिं पडिस्सुयं, सेणिओ वद्धो, पुव्वन्हे अवरन्हे य कससयं दवावेइ सेणियस्स कूणिओ पुव्वभवे वेरियत्तणेण चेल्लणाए कयाइ [1]भोयं न देइ भत्तं वारियं पाणियं न देइ। ताहे चेल्लणा कहऽवि कुम्मासे वाले हिं वंधित्ति सयारंवसुरं पवेसेइ। सा किर धोव्वइ सयवारे सुरा पाणियं सव्व होइ, तीए पहावेण सो वेयणं न वेएइ। अन्नया तस्स पउमावईदेवीए पुत्तो एवं पिओ अत्थि, मायाए सो भणिओ-

१ 'दोयं' प्रत्यन्तरे.

"दुरात्मन्! तव अंगुली किमिए वमंती पिया मुहे काऊण अत्थिआओ, इयरहा तुमं रोवंतो चेव चिट्ठेसु"। ताहे चित्तं मणागुवसंतं जायं [1]मए पिया एवं वसणं पाविओ, तस्स अधिई जाया, भुंजंतओ चेव उट्ठाय परसुहत्थगओ, अन्ने भणंति लोहदंडं गहाय, 'नियलाणि भंजामि' त्ति पहाविओ। रक्खवालगो नेहेण भणइ—'एसो सो पावो लोहदंडं परसुं वा गहाय एइ' त्ति। सेणिएण चिंतियं-'न नज्जइ केण कुमारेण मारेहि?'। तउ तालपुडगं विसं खइयं। जाव एइ ताव मओ। सुट्ठुयरं अधिई जाया। ताहे मयकिच्चं काऊण घरमागओ रज्जुधुरामुक्कतत्तीओ तं चेव चिंततो अच्छइ। एवं कालेण विसोगो जाओ। पुणरवि सयणआसणाईए पिइसंतिए दट्ठूण अधिई होइ। तउ रायगिहाओ निग्गंतु चंपं रायहाणिं करेइ। एवं चंपाए कूणिओ राया रज्जं करेइ नियगभायपमुहसयणेसंजोगओ। इह निरयावलियासुयखंधे कूणिकवक्तव्यता आदावुत्क्षिप्ता। तत्साहाय्यकरणप्रवृत्तानां कालादीनां कुमाराणां दशानामपि सङ्ग्रामे रथमुशलाख्ये प्रभूतजनक्षयकरणेन नरकयोग्यकर्मोपार्जनसंपादनान्नरकगामितया 'निरयाउ' त्ति प्रथमाध्ययनस्य कालादिकुमारवक्तव्यताप्रतिबद्धस्य एतन्नाम। अथ रथमुशलाख्यसङ्ग्रामस्योत्पत्तौ किं निबन्धनम्। अत्रोच्यते-एवं किलायं सङ्ग्रामः संजातः—चम्पायां कूणिको राजा राज्यं चकार। तस्य चानुजौ हल्लाविहल्लभिधानौ भ्रातरौ पितृदत्तसेचनकाभिधाने गन्धहस्तिनि समारूढौ दिव्यकुण्डलदिव्यवसनदिव्यहारविभूषितौ विलसन्तौ दृष्ट्वा पद्मावत्यभिधाना कूणिकराजस्य भार्या कदाचिद्दन्तिनोऽपहाराय तं कूणिकराजं प्रेरितवती—"कर्णविपलब्धकृतोऽतोऽयमेव कुमारो राजा तत्त्वतः, न त्वं, यस्येदृशा विलासाः"। प्रज्ञाप्यमानाऽपि सा न कथञ्चिदस्यार्थस्योपरमति, तत्प्रेरितकूणिकराजेन तौ याचितौ। तौ च तद्भयाद्वैशाल्यां नगर्यां स्वकीयमातामहस्य चेटकाभिधानस्य राज्ञोऽन्तिके सहस्तिकौ सान्तःपुरपरिवारितौ गतवन्तौ। कूणिकेन च दूतप्रेषणेन तौ याचितौ। न च तेन प्रेषितौ, कूणिकस्य तयोश्च तुल्यमातृकत्वात्। ततः कूणिकेन भणितं-'यदि न प्रेषयसि तदा युद्धसज्जो भव'। तेनापि

[1] 'तओ तुमए' प्रत्यन्तरे.

तते णं से काले कुमारे अन्नया कयाइ तिहिं दंतीसहस्सेहिं तिहिं रहसहस्सेहिं तिहिं आससहस्सेहिं तिहिं मणुयकोडीहिं गरुलवूहे । एक्कारसमेणं खंडेण कूणिएणं

भणितम्—'एष सज्जोऽस्मि' । ततः कूणिकेन सह कालादयो दश स्वीया भिन्नमातृका भ्रातरो राजानश्चेटकेन सह सङ्ग्रामाय यत्ताः । तत्रैकैकस्य त्रीणि त्रीणि हस्तिनां सहस्राणि, ए॰ रथानामश्वानां च, मनुष्याणां च प्रत्येक तिस्रस्तिस्रः कोटयः । कूणिकस्याप्येवमेव । तत्र एकादशभागीकृतराज्यस्य कूणिकस्य कालादिभिः सह निजेन एकादशांशेन सङ्ग्रामे काल उपगतः । एतमथ वक्तुमाह-'तए णं से काले' इत्यादिना । एनं च व्यतिकरं ज्ञात्वा चेटकेनाप्यष्टादश गणराजानो मेलिताः, तेषां चेटकस्य च प्रत्येकमेवमेव हस्त्यादिवलपरिमाणं, ततो युद्धं संप्रलग्नम् । चेटकराजस्य तु प्रतिपन्नव्रतत्वेन दिनमध्ये एकमेव शरं मुञ्चति अमोघवाणश्च सः । तत्र च कूणिकसन्ये गरुडव्यूहः चेटकसन्ये (च) सागरव्यूहो विरचितः । ततश्च कूणिकस्य कालो दण्डनायको निजवलान्वितो युध्यमानस्तावद्गतो यावच्चेटकः, ततस्तेन एकशरनिर्घातेनासौ निपातितः १ । भग्नं च कूणिकवलम् , गते च द्वे अपि वले निजं निजमावासस्थानम् । द्वितीयेऽह्नि सुकालो नाम दण्डनायका निजवलान्वितो युध्यमानस्तावद्गतो यावच्चेटकः, एवं सोऽप्येक शरेण निपातितः २ । एवंतृतीयेऽह्नि महाकालः सोऽप्येवम् ३ । चतुर्थेऽह्नि कृष्णकुमारस्तथैव ४। पञ्चमे सुकृष्णः ५ षष्ठे महाकृष्णः ६, सप्तमे वीरकृष्णः ७, अष्टमे रामकृष्णः ८, नवमे पितृसेनकृष्णः ९ दशमे पितृमहासेनकृष्णः १० चेटकेनककशरेण निपातिताः । एवं दशसु दिवसेषु चेटकेन विनाशिता दशापि कालादयः । एकादशे तु दिवसे चेटकजयार्थं देवताराधनाय कूणिकोऽष्टमभक्तं प्रजग्राह । ततः शक्रचमरावागतौ । ततः शक्रो वभाषे-"चेटकः श्रावक इत्यहं न तं प्रति प्रहरामि, नवरं भवन्तं संरक्षामि" । ततोऽसौ तद्रक्षार्थ वज्रप्रतिरूपकमभेद्यकवचं कृतवान् । चमरस्तु द्वौ सङ्ग्रामौ विकुर्वितवान् महाशिलाकण्टकं रथमुशलं चेति । तत्र महाशि-

रन्ना सद्धिं रहमुसलं संगामं ओयाए । तत्तेणं तीसे कालीए देवीए अन्नया कयाइ कुडुंबजागरियं जागरमाणीए अयमेयारूवे अज्झत्थिए जाव समुप्पज्जित्था-एवं खलु ममं पुत्ते कालकुमारे तिहिं दंतिसहस्सेहिं जाव ओयाए । से मन्ने किं जइस्सति ? नो जइस्सति ? जीविस्सइ ? नो जीविस्सति ? पराजिणिस्सइ ? णो पराजिणिस्सइ ? काले णं कुमारे णं अहं जीवमाणं पासिज्जा ? ओहयमण जाव झियाइ । ते णं काले णं ते णं समए णं समणे भगवं महावीरे समोसरिते । परिसा निग्गया । तते णं तीसे कालीए देवीए इमीसे कहाए लद्धट्ठाए समाणीए अयमेयारूवे अज्झत्थिए जाव समुप्पज्जित्था-

---

केन' कण्टको जीवितभेदकत्वान्महाशिलाकण्टकः । ततश्च यत्र तृणशूकादिनाऽप्यभिहतस्याश्वहस्त्यादेर्महाशिलाकण्टकेनेवाभिहतस्य वेदना जायते, स संग्रामो महाशिलाकण्टक इत्युच्यते । 'रहमुसले' त्ति यत्र रथो मुसलेन युक्तः परिधावन् महाजनक्षयं कृतवान् अतो रथमुसलः । 'ओयाए' त्ति उपयातः-संप्राप्तः । 'किं जइस्सइ' त्ति जयश्रियं प्राप्स्यति । पराजेष्यते-अभिभविष्यति शत्रूनयं परानभिभविष्यति उत नेति कालनामानं पुत्रं जीवन्तं द्रक्ष्याम्यहं न वेत्यादि, उपहतो मनःसंकल्पो युक्तायुक्तविवेचनं यस्याः सा उपहतमनःसंकल्पा । यावत्करणात् "करयलपल्लत्थियमुही अट्टज्झाणोवगया ओमंथियनयणवयणकमला" ओमंथियं-अधोमुखीकृतं वदनं च नयनकमले च यया सा तथा । 'दीणविवन्नवयणा' दीनस्येव विवर्णं वदनं यस्याः सा तथा । 'झियाइ' त्ति आर्तध्यानं ध्यायति, 'मणोमाणसिएणं दुक्खेण अभिभूया' मनसि जातं मानसिकं मनस्येव यद्वर्तते मानसिकं दुःखं वचनेनाप्रकाशितत्वात् तन्मनोमानसिकं तेन अबहिर्वर्तिनाऽभिभूता । 'ते णं काले णं' इत्यादि । 'अयमेयारूवे' त्ति अयमेतद्रूपो वक्ष्यमाणरूपः 'अज्झत्थिए' त्ति आध्यात्मिकः-आत्मविषयः चिन्तितः-स्मरणरूपः, प्रार्थितः-लब्धुमाशंसितः, मनोगतः-मनस्येव वर्तते यो न बहिः प्रकाशितः, संकल्पो-विकल्पः, समुत्पन्नः-प्रादुर्भूतः । तमेवाह-

एवं खलु समणे भगवं० पुव्वाणुपुव्विं इ हमागते जाव विहरति। तं महाफलं खलु तहारूवाणं जाव विउलस्स अट्ठस्स गहणताए, तं गच्छामि णं समणं जाव पज्जुवासामि। इमं च णं एयारूवं वागरणं पुच्छिस्सामि त्तिकट्टु एवं संपेहेइ

'एवमि' त्यादि। यावत्करणात् "पुव्वाणुपुव्विं चरमाणे गामाणुगामं दुइज्जमाणे इहमागए इह संपत्ते इह समोसढे, इहेव चंपाए नयरीए पुन्नभद्दे चेइए अहापडिरूवं उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे विहरइ"। 'तं महाफलं खलु' भो देवाणुप्पिया! 'तहारूवाणं' अरहंताणं, भगवंताणं, नामगोयस्स वि सवणयाए, किमंग पुण अभिगमणवंदणनमंसणपडिपुच्छणपज्जुवासणाए! एगस्स वि आरियस्स धम्मियस्स वयणस्स सवणयाए, किमंग पुण 'विउलस्स अट्ठस्स गहणयाए' गच्छामि णं' अहं 'समणं' भगवं महावीरं वंदामि नमंसामि सक्कारेमि सम्माणेमि कल्लाणं मंगलं देवयं चेइयं 'पज्जुवासामि,' एवं नो पेच्चभवे हियाए सुहाए खमाए निस्सेयसाए आणुगामियत्ताए भविस्सइ 'इमं च णं एयारूवं वागरणं पुच्छिस्सामि त्तिकट्टु एवं संपेहेति' संप्रेक्षते-पर्यालोचयति, सुगमम्, नवरं 'इहमागए' त्ति चम्पायां, 'इह संपत्ते' त्ति पूर्णभद्रे चत्ये, 'इह समोसढे' त्ति साधूचितावग्रहे, एतदेवाह-इहेव चंपाए इत्यादि। 'अहापडिरूवं' ति यथाप्रतिरूपम् उचितमित्य :। 'तं' इति तस्मात्, 'महाफलं' ति महत्फलमायत्यां भवतीति गम्यं, 'तहारूवाणं' ति तत्प्रकारस्वभावानां-महाफलजननस्वभावानामित्यर्थः। 'नामगोयस्स' त्ति नाम्नो-याहच्छिकस्याभिधानस्य, गोत्रस्य-गुणनिष्पन्नस्य 'सवणयाए' त्ति श्रवणेन, 'किमंग पुण' त्ति किंपुनरिति पूर्वोक्तार्थस्य विशेषद्योतनार्थम्अङ्गेत्यामन्त्रणे, यद्वा परिपूर्ण एवायं शब्दा विशेषणार्थः, अभिगमनं, वन्दनं-स्तुतिः, नमनं-प्रणमन, प्रतिपृच्छन-शरीरादिवार्ताप्रश्नं, पर्युपासनं-सेवा तद्भावस्तत्ता तया, एकस्यापि आर्यस्य आर्यप्रणेतृकत्वात्, धार्मिकस्य धर्मप्रतिबद्धत्वात्, वन्दामि-वन्दे, स्तौमि, नमस्यामि-प्रणमामि, सत्कारयामि-आदरं करोमि वस्त्राद्यर्चनं वा, सन्मानयामि उचितप्रतिपत्त्येति। कल्याणं-कल्याणहेतुं,

संपेहित्ता कोडुंबिय पुरिसे सद्दावेति २ त्ता एवं वदासि खिप्पामेव भो देवाणुप्पिया ! धम्मियं जाणप्पवरं जुत्तमेव उवट्ठवेह, उवट्ठवित्ता जाव पच्चप्पिणंति। तते णं सा काली देवी ण्हाया कयवलिकम्मा जाव अप्पमहग्घाभरणालंकियसरीरा बहूहिं खुज्जाहिं जाव महत्तरगविंदपरिक्खित्ता अंतेउराओ निग्गच्छइ, निग्गच्छित्ता जेणेव बाहिरिया

---

मङ्गलं दुरितोपशमनहेतुं, देव चत्यमिव चत्यं, पर्युपासयामि–सेवे, एतत्, नोऽस्माकं, प्रेत्यभवे–जन्मान्तरे, हिताय पथ्यान्नवत्, सुखाय–शर्मणे, क्षमाय–सङ्गतत्वाय, निःश्रेयसाय–मोक्षाय, आनुगामिकत्वाय–भवपरम्परासु सानुबन्धसुखाय, भविष्यति, इति कृत्वा–इति हेतोः, संपेक्षते पर्यालोचयति, संप्रेक्ष्य चैवमवादीत्–शीघ्रमेव 'भो देवाणुप्पिया' ! धर्माय नियुक्तं धार्मिकं, यानप्रवरं, 'चाउग्घंटं आसरहं' ति चतस्रो घण्टाः पृष्ठतोऽग्रतः पार्श्वतश्च लम्बमाना यस्य स चतुर्घण्टः, अश्वयुक्तो रथोऽश्वरथस्तमश्वरथं, युक्तमेवाश्वादिभिः, उपस्थापयत–प्रगुणीकुरुत, प्रगुणीकृत्य मम समर्पयत। 'ण्हाय' त्ति कृतमज्जना, स्नानानन्तरं 'कयवलिकम्म' त्ति स्वगृहे देवतानां कृतवलिकर्मा, 'कयकोउयमंगलपायच्छित्त' त्ति कृतानि कौतुकमङ्गलान्येव प्रायश्चित्तानीव दुःस्वप्नादिव्यपोहायावश्यंकर्तव्यत्वात् प्रायश्चितानि यया सो तथा। तत्र कौतुकानि–मषीपुण्ड्रादीनि, मङ्गलादीनि-सिद्धार्थदध्यक्षतदूर्वाङ्कुरादीनि, 'सुद्धप्पावेस्साइं वत्थाइं परिहिया' 'अप्पमहग्घाभरणालंकियसरीरा' (इति) सुगमम्, 'बहूहिं खुज्जाहिं जावे' त्यादि, तत्र कुब्जिकाभिः–वक्रजङ्घाभिः, चिलातीभिः–अनार्यदेशोत्पन्नाभिः, वामनाभिः–ह्रस्वशरीराभिः, वटभाभिः–मडहकोष्ठाभिः वर्वरीभिः–वर्वरदेशसंभवाभिः, वकुशिकाभिः योनकाभिः पण्हकाभिः इसिनिकाभिः वासिनिकाभिः लासिकाभिः लकुसिकाभिः द्रविडीभिः सिंहलीभिः आरवीभिः पक्वणीभिः वहुलीभिः मुसण्डीभिः शवरीभिः पारसीभिः नानादेशाभिः–वहुविधानार्यदेशोत्पन्नाभिरित्यर्थः, विदेशस्तदीयदेशापेक्षया चम्पानगरी विदेशः तस्य परिमण्डिकाभिः, 'इंगियचिंतियपत्थियवियाणियाहिं' तत्र इङ्गितेन–नयनादिचेष्टाविशेषेण चिन्तितं च–परेण हृदि स्थापितं प्रार्थितं च–अभिल-

उवट्ठाणसाला जेणेव धम्मिए जाणप्पवरे तेणेव उवागच्छइ, धम्मियं जाणप्पवरं दुरुहति २ नियगपरियालसंपरिवुडा चंपं नयरीं मज्झं मज्झेणं निग्गच्छति२ जेणेव पुन्नभद्दे चेइए तेणेव उवागच्छइ २ छत्तादिए जावि धम्मियं जाणप्पवरं ठवेति. २ धम्मियाओ जाणप्पवराओ पच्चोरुहति २ बहूहिं जाव खुज्जाहिं विंदपरिक्खित्ता जेणेव समणे भगवं (महावीरे) तेणेव उवागच्छति २ समणं भगवं [महावीरं] तिखुत्तो वंदति७ ठिया चेव सपरिवारा सुस्सूसमाणा नमंसमाणा अभिमुहा विणएणं पंजलिउडा पज्जुवासति। तते णं समणे भगवं जाव कालीए देवीए तीसेय महतिमहालियाए धम्मकहा भाणियव्वा जाव समणोवासए वा समणोवासिया वा विहरमाणा आणाए आराहए भवति। तते णं सा काली देवी समणस्स भगवओ अंतियं धम्मं सोच्चा निसम्म जाव हियया समणं भगवं तिखुत्तो जाव एवं वदासि–एवं खलु भंते मम पुत्ते काले कुमारे तिहिं दंतिसहस्सेहिं जाव रहमुसलसंगामं ओयाते। से णं भंते किं जइस्सति? नो जइस्सति? जाव काले णं कुमारे अहं जीवमाणं पासिज्जा? कालीति समणे भगवं कालिं देविं एवं वयासी–एवं खलु काली! तव पुत्ते काले कुमारे तिहिं दंतिसहस्सेहिं जाव कूणिएणं रन्ना सद्धिं

---

पितं च विजानन्ति यास्तास्तथा ताभिः स्वस्वदेशे यन्नेपथ्यं परिधानादिरचना तद्गृहीतो वेपो यकाभिस्तास्तथा ताभिः, निपुणनामधेयकुशला यास्तास्तथा ताभिः अत एव विनीताभिः, युक्तेति गम्यते, तथा चेटिकाचक्रवालेन अर्थात् स्वदेशसंभवेन वृन्देन परिक्षिप्ता या सा तथा। 'उवट्ठाणसाला' उपवेशनमण्डपः। 'दुरुहइ' आरोहति। यत्रव श्रमणो भगवान् तत्रैवोपागता-संप्राप्ता, तदनु महावीरं त्रिकृत्वो वन्दते–स्तुत्या, नमस्यति–प्रणमति, स्थिता चैव ऊर्ध्वस्थानेन, कृताञ्जलिपुटा अभिसंमुखा सती पर्युपास्ते। धर्मकथाश्रवणानन्तरं 'त्रिःकृत्वो' वन्दयित्वा (वन्दित्वा) एवमवादीत्–'एवं खलु भंते' इत्यादि सुगमम्। अत्र कालीदेव्याः पुत्रः कालनामा कुमारो हस्तितुरगरथपदातिरूपनिजसन्यपरिवृतः कूणिकराजनियुक्तश्चेटकराजेन सह

रहमुसलं संगामं संगामेमाणे हयमहियपवरवीरघातितनिवडितचिंधज्झयपडागे निरालोयातो दिसातो करेमाणे चेडगस्स रन्नो सपक्खं सपडिदिसिं रहेणं पडिरहं हव्वमागते। ततेणं से चेडए राया कालं कुमारं एज्जमाणं पासति, कालं एज्जमाणं पासित्ता आसुरुत्ते जाव मिसिमिसेमाणे धणुं परामुसति २ उसुं परामुसइ २ वइसाहं ठाणं ठाति २ आययकण्णायतं उसुं करेति २ कालं कुमारं एगाहच्चं कूडाहच्चं जीवियाओ ववरोवेति। तं कालगते णं काली! काले कुमारे नो चेव णं तुमं कालं कुमारं जीवमाणं

---

रथमुशलं सङ्ग्रामयन् सुभटैश्चेटकसत्कैर्यदस्यकृत तदाह-'हयमहियपवरवीरघाइयनिवडियचिंधज्झयपडागे' (हत:) सैन्यस्य हतत्वात्, मथितो मानस्य मन्थनात्, प्रवरवीराः—सुभटा घातिताः-विनाशिता यस्य, तथा निपातिताश्चिह्नध्वजाः-गरुडादिचिह्नयुक्ताः केतवः पताकाश्च यस्य स तथा, ततः पदचतुष्टयस्य कर्मधारयः अत एव 'निरालोआओ दिसाओ करेमाणे' त्ति निर्गतालोका दिशः कुर्वन् चेटकराजः (स्य) 'सपक्खं सपडिदिसिं' ति सपक्षं-समानपार्श्वं समानवामेतरपार्श्वतया, सप्रतिदिक्-समानप्रतिदिक्तयाऽत्यर्थमभिमुख इत्यर्थः, अभिमुखागमने हि परस्परस्य समाविव दक्षिणवामपार्श्वौ भवतः, एवं विदिशावपीति। इत्येवं स कालः चेटकराजस्य रथेन प्रतिरथं 'हव्वं' शीघ्रम् आसन्नं-संमुखीनम् आगच्छन्तं दृष्ट्वा चेटकराजः त प्रति 'आसुरुत्ते' रुट्ठे कुविए चंडिक्किए 'मिसिमिसेमाणे' त्ति, तत्र आशु-शीघ्र रुष्टः-क्रोधेन विमोहितो यः स आशुरुष्टः, आसुरं वा-असुरसत्कं कोपेन दारुणत्वात् उक्तं-भणितं यस्य स आसुरोक्तः, रुष्टो-रोषवान् 'कुविए' त्ति मनसा कोपवान् चाण्डिक्यितो-दारुणीभूतः 'मिसिमिसेमाणे' त्ति क्रोधज्वालया ज्वलन्, तिवलियं भिउडिं निडाले साहट्टु' त्ति त्रिवलिकां भृकुटिं-लोचनविकारविशेषं ललाटे संहृत्य-'धाय, धनुः परामृशति, बाणं परामृशति, विशाखस्थानेन तिष्ठति, 'आययकण्णायतं' ति आकर्णान्तं बाणमाकृष्य 'एगाहच्चं' ति एकयवाहत्या आहननं प्रहारो यत्र जीवितव्यपरोपणे तदेकाहत्यं यथा भवति एवं, कथमित्याह-'कूडाहच्चं' कूटस्येव-पाषाणमयमहामारणयन्त्रस्येव आहत्या आहननं यत्र तत्कूटाहत्य, 'भगवतोक्तेयं

पासिहिसि। तते णं सा काली देवी समणस्स भगवओ अंतियं एयमट्ठं सोच्चा निसम्म महया पुत्तसोएणं[1] अप्फुन्ना समाणी परसुनियत्ताविव चंपगलता धस त्ति धरणीतलंसि सव्वंगेहिं संनिवडिया। तते णं सा काली देवी मुहुत्तंतरेणं आसत्था समाणी उट्ठाए उट्ठेति उट्ठित्ता समणं भगवं (महावीरं) वंदइ नमंसइ२ एवं वयासी—एवमेयं भंते! तहमेयं भंते! अवितहमेयं भंते! असंदिद्धमेयं भंते! सच्चेणं एसमट्ठे से जहेतं तुब्भे वदह त्तिकट्टु समणं भगवं वंदइ नमंसइ२, तमेव धम्मियं जाणप्पवरं दुरुहति२ जामेव दिसं पाउब्भूया तामेव दिसं पडिगता। भंते त्ति भगवं गोयमे जाव वंदति नमंसति २ एवं वयासी—कालेणं भंते! कुमारे तिहिं दंतिसहस्सेहिं जाव रहमुसलं संगामं संगामेमाणे चेडएणं रन्ना एगाहच्चं कूडाहच्चं जीवयाओ ववरोविते समाणे कालमासे कालं किच्चा कहिं गते? कहिं उववन्ने? गोयमाति समणे भगवं गोयमं एवं वदासि—एवं खलु गोयमा! काले कुमारे तिहिं दंतिसहस्सेहिं जाव जीवियाओ ववरोविते समाणे कालमासे कालं किच्चा चउत्थीए पंकप्पभाए पुढवीए हेमाभे नरगे दससागरोवमठिइएसु नेरइएसु नेरइयत्ताए उववन्ने। कालेणं भंते! कुमारे केरिसएहिं आरंभेहिं केरिसएहिं (समारंभेहिं केरिसएहिं) आरंभसमारंभेहिं केरिसएहिं भोगेहिं केरिसएहिं संभोगेहिं केरिसएहिं भोगसंभोगेहिं केरिसेण वा असुभकडकम्मपब्भारेणं कालमासे कालं किच्चा चउत्थीए पंकप्पभाए पुढवीए जाव नेरइयत्ताए उववन्ने? एवं खलु गोयमा! ते णं कालेणं ते णं समएणं रायगिहे नामं नयरे होत्था, रिद्धत्थिमियसमिद्धा। तत्थ णं रायगिहे नयरे सेणिए नामं राया होत्था, महया। तस्स णं सेणियस्स रन्नो नंदा नामं देवी होत्था, सोमाला जाव विहरति। तस्स णं सेणि-

१ व्याख्या, 'अप्फुण्णा समाणी' व्याप्ता सती। शेषं सुगमं यावत्

यस्स रन्नो नंदाए देवीए अत्तए अभए नामं कुमारे होत्था, सोमाले जाव सुरूवे साम० दंडे जहा चित्तो जाव रज्जधुराए चिंतए यावि होत्था। तस्स णं सेणियस्स रन्नो चेल्लणा नामं देवी होत्था, सोमाले जाव विहरइ। तते णं सा चिल्लणा देवी अन्नया कयाइं तंसि तारिसयंसि वासघरंसि जाव सीहं सुमिणे पासित्ता णं पडिवुद्धा, जहा पभावती, जाव सुमिणपाढगा पडिविसज्जिता, जाव चिल्लणा से वयणं पडिच्छत्ता जेणेव सए भवणे तेणेव अणुपविट्ठा। तते णं तीसे चेल्लणाए देवीए अन्नया कयाइं तिण्हं मासाणं वहुपडिपुण्णाणं अयमेयारूवे दोहले पाउब्भूए-धन्नाओ णं ताओ अम्मयाओ जाव जम्मजीवियफले जाओ णं सेणियस्स रन्नो उदरवलीमंसेहिं सोल्लेहि य तलिएहि य भज्जितेहि य सुरं च जाव पसन्नं च आसाएमाणीओ जाव परिभाएमाणीओ दोहलं पविणेंति। तते णं सा चेल्लणा देवी तंसि दोहलंसि अविणिज्जमाणंसि सुक्का भुक्खा निम्मंसा ओलुग्गा ओलुग्गसरीरा नित्तेया दीणविमणवयणा पंडुइतमुही ओमंथियनयणवयणकमला जहोचियं पुप्फवत्थगंधमल्लालंकारं अपरिभुंजमाणी करतलमलियव्व कमलमाला ओहतमणसंकप्पा जाव झियायति। तते णं तीसे चेल्लणाए देवीए अंगपडिया-

---

'सोल्लेहि य' त्ति पक्वैः 'तलिएहि' त्ति स्नेहेन पक्वैः, 'भज्जिएहि' भ्रष्टैः 'पसन्न च' द्राक्षादिद्रव्यजन्यो मनःप्रसत्तिहेतुः 'आसाएमाणीओ' त्ति ईषत्स्वादयन्त्यो वहु च त्यजन्त्त इक्षुखण्डादेरिव, 'परिभाएमाणीओ' सर्वमुपभुञ्जानाः (परस्परं ददन्त्यः) 'सुक्क' त्ति शुष्केव शुष्काभा रुधिरक्षयात्, 'भुक्ख' त्ति भोजनाकरणतो वुभुक्षितेव, 'निम्मंसा' मांसोपचयाभावतः, 'ओलुग्ग' त्ति अवरुग्णा-भग्नमनोवृत्तिः, 'ओलुग्गसरीरा' भग्नदेहा, निस्तेजा-गतकान्तिः दीना-विमनोवदना, पाण्डुकितमुखी-पाण्डरीभूतवदना, 'आमंथिय' त्ति अधोमुखीकृतं, उपहतमनःसङ्कल्पा-गतयुक्तायुक्तविवेचना,

रियातो चेल्लणं देविं सुक्कं भुक्खं जाव झियायमाणीं पासंति, पासित्ता जेणेव सेणिए राया तेणेव उवागच्छंति, २ करतलपरिग्गहियं सिरसावत्तं मत्थए अंजलिं कट्टु सेणियं रायं एवं वयासी—एवं खलु सामी! चेल्लणा देवी न याणामो केणइ कारणेणं सुका भुक्खा जाव झियायति। तते णं से सेणिए राया तासिं अंगपडियारियाणं अंतिए एयमट्ठं सोच्चा निसम्म तहेव संभंते समाणे जेणेव चेल्लणा देवी तेणेव उवागच्छइ २ चिल्लणं देविं सुक्कं भुक्खं जाव झियायमाणिं पासित्ता एवं वयासी—किन्नं तुमं देवाणुप्पिए! सुका भुक्खा जाव झियायसि? तते णं सा चेल्लणा देवी सेणियस्स रण्णो एयमट्ठंणो आढाति णो परिजाणाति तुसिणीया संचिट्ठति। तते णं से सेणिए राया चिल्लणं देविं दोच्चं पि तच्चंपि एवं वयासी—किं णं अहं देवाणुप्पिए! एयमट्ठस्स नो अरिहे सवणयाए जं णं तुमं एयमट्ठं रहस्सीकरेसि? तते णं सा चेल्लणा देवी सेणिएणं रन्ना दोच्चं पि तच्चं पि एवं वुत्ता समाणी सेणियं रायं एवं वयासी—णत्थि णं सामी! से केति अट्ठे जस्स णं तुब्भे अणरिहा सवणयाए, नो चेव णं इमस्स अट्ठस्स सवणयाए, एवं खलु सामी! ममं तस्स ओरालस्स जाव महासुमिणस्स तिण्हं मासाणं बहुपडिपुण्णाणं अयमेयारूवे दोहले पाउब्भूए धन्नातो णं तातो अम्मयाओ जाओ णं तुब्भं उदरवलिमंसेहिं सोल्लेएहि य जाव दोहलं विणेंति। तते णं अहं सामी! तंसि दोहलंसि अविणिज्जमाणी सुका भुक्खा जाव झियायामि। तते णं से

---

'करयल० कट्ट' ति 'करयलपरिग्गहियं दसनहं सिरसावत्तं मत्थए अजलिं कट्टु सेणियं रायं एवं वयासी' स्पष्टम्। एनमर्थं नाद्रियते—अत्रार्थे आदरं न कुरुते, न परिजानीते—नाभ्युपगच्छति, कृतमौना तिष्ठति। 'धन्नाओ णं कयलक्खणाओ णं सुलद्धे णं तासिं जम्मजीवियफले' अविणिज्जमाणंसि' त्ति अपूर्यमाणे

सेणिए राया चेल्लणं देविं एवं वदासि-मा णं तुमं देवाणुप्पिए ! ओहय० जाव झियायहि, अहं णं तहा जत्तिहामि जहा णं तव दोहलस्स संपत्ती भविस्सतीतिकट्टु चिल्लणं देविं ताहिं इट्ठाहिं कंताहिं पियाहिं मणुन्नाहिं मणामाहिं ओरालाहिं कल्लाणाहिं सिवाहिं धन्नाहिं मंगल्लाहिं मियमधुरसस्सिरीयाहिं वग्गूहिं समासासेति, चिल्लणाए देवीए अंतियातो पडिनिक्खमति २ जेणेव बाहिरिया उवट्ठाणसाला जेणेव सीहासणे तेणेव उवागच्छइ, उवागच्छित्ता सीहासणवरंसि पुरत्थाभिमुहे निसीयति, तस्स दोहलस्स संपत्तिनिमित्तं बहूहिं आएहिं उवाएहि य उप्पत्तियाए य वेणइयाए य कम्मियाहि य पारिणामियाहि य परिणामेमाणे २ तस्स दोहलस्स आयं वा उवायं वा ठिइं वा अविंदमाणे ओहयमणसंकप्पे जाव झियायति। इमं च णं अभए कुमारे ण्हाए जाव सरीरे, सयाओ गिहाओ पडिनिक्खमति २ जेणेव बाहिरिया उवट्ठाणसाला जेणेव सेणिए राया तेणेव उवागच्छति, सेणियं रायं ओहय० जाव झियायमाणं पासति २ एवं वदासी-अन्नया णं ततो ! तुब्भे ममं पासित्ता हट्ठ जाव हियया भवह, किन्नं तातो ! अज्ज तुब्भे ओहय० जाव झियायह ? तं जइ णं अहं तातो ! एयमट्ठस्स अरिहे सवणयाए तो णं तुब्भे मम एयमट्ठं जहाभूतमवितहं असंदिद्धं परिकहेह, जा णं अहं तस्स अट्ठस्स अंतगमणं करेमि । तते णं से सेणिए राया अभयं कुमारं एवं वदासि-णत्थि णं पुत्ता ! सेकेइ अट्ठे जस्स णं तुमं अणरिहे सवणयाए, एवं खलु पुत्ता ! तव चुल्लमाउयाए चेल्लणाए देवीए तस्स ओरालस्स जाव महासुमिणस्स तिण्हं मासाणं बहुपडिपुन्नाणं जाव जाओ णं मम उदरवलीमंसेहिं सोल्लेहि

'जत्तिहामि' त्ति यतिष्ये, 'इट्ठाहिं' इष्टाभीत्यादीनां व्याख्या प्रागिवोक्ता। 'उवट्ठाणसाला' आस्थानमण्डपः। 'ठिइं वा' स्थानं 'अविंदमाणे' अलभमानः। अंतगमनं-पारगमन तत्संपादनेन।

य जाव दोहलं विणेंति। तते णं सा चिल्लणा देवी तंसि दोहलंसि अविणिज्जमाणंसि सुक्का जाव झियाति। तते णं अहं पुत्ता! तस्स दोहलस्स संपत्तिनिमित्तं बहूहिं आएहि य जाव ठितिं वा अविंदमाणे ओहय० जाव झियामि। तए णं से अभए कुमारे सेणियं रायं एवं वदासि–मा णं तातो! तुब्भे ओहय० जाव झियाह, अहं णं तह जत्तिहामि, जहा णं मम चुल्लमाउयाए चिल्लणाए देवीए तस्स दोहलस्स संपत्ती भविस्सतीतिकट्टु सेणियं रायं ताहिं इट्ठाहिं जाव वग्गूहिं समासासेति २ जेणेव सए गिहे तेणेव उवागच्छइ २ अब्भितरए रहस्सितए ठाणिज्जे पुरिसे सद्दावेति २ एवं वयासी–गच्छह णं तुब्भे देवाणुप्पिया सूणातो अल्लं मंसं रुहिरं वत्थिपुडगं च गिण्हह। तते णं ते ठाणिज्जा पुरिसा अभएणं कुमारेणं एवं वुत्ता समाणा हट्ठ० करतल० जाव पडिसुणेत्ता अभयस्स कुमारस्स अंतियाओ पडिनिक्खमंति २ जेणेव सूणा तेणेव उवागच्छइ, अल्लं मंसं रुहिरं वत्थिपुडगं च गिण्हंति २ जेणेव अभए कुमारे तेणेव उवा० करतल० तं अल्लं मंसं रुहिरं वत्थिपुडगं च उवणेंति। तते णं से अभए कुमारे तं अल्लं मंसं रुहिरं कप्पणिकप्पियं ( अप्पकप्पियं )करेति २ जेणेव सेणिए राया तेणेव उवा० २ सेणियं रायं रहस्सिगयं सयणिज्जंसि उत्ताणयं निवज्जावेति २ सेणियस्स उदरवलीसु तं अल्लं मंसं रुहिरं विरवेति २ वत्थिपुडएणं वेढेति२ सवंतीकरणेणं करेति २ चेल्लणं देविं उप्पि पासादे अवलोयणवरगयं ठवावेति२ चेल्लणाए देवीए अहे सपक्खं सपडिदिसिं सेणियं रायं सयणिज्जंसि उत्ताणगं निवज्जावेति, सेणियस्स रन्नो उदरवलिमंसाइं कप्पणिकप्पियाइं करेति२ से य भायणंसि

---

'सूणाओ' घातस्थानात्। 'वत्थिपुडगं' उदरान्तर्वर्ता प्रदेशः। अप्पकप्पियं आत्मसमीपस्थम्। सपक्षं–समानपार्श्व समवामेतरपार्श्वतया। सप्रतिदिक्–समानप्रतिदिक्तया अत्यर्थमभिमुख इत्यर्थः, अभिमुखावस्थानेन हि परस्परस्य समावेव

पक्खिवति । तते णं से सेणिए राया अलियमुच्छियं करेति २ मुहुत्तंतरेणं अन्नमन्नेणं सद्धिं संलवमाणे चिट्ठति । तते णं से अभयकुमारे सेणियस्स रन्नो उदरवलिमंसाइं गिण्हेति २ जेणेव चिल्लणा देवी तेणेव उवागच्छइ २ चेल्लणाए देवीए उवणेति । तते णं सा चिल्लणा सेणियस्स रन्नो तेहिं उदरवलिमंसेहिं सोल्लेहिं जाव दोहलं विणेति । तते णं सा चिल्लणा देवी संपुण्णदोहला एवं संमा।णयदोहला विच्छिन्नदोहला तं गब्भं सुहंसुहेणं परिवहति । तते णं तीसे चेल्लणाए देवीए अन्नया कयाइ पुव्वरत्तावरत्तकालसमयंसि अयमेयारूवे जाव समुप्पज्जित्था–जइ ताव इमेणं दारएणं गब्भगएणं चेव पिउणो उदरवलिमंसाणि खाइयाणि तं सेयं खलु मए एयं गब्भं साडित्तए वा पडित्तए वा गालित्तए वा विद्धंसित्तए वा एवं संपेहेति २ तं गब्भं वहूहिं गब्भसाडणेहि य गब्भपाडणेहि य गब्भगालणेहि य गब्भविद्धंसणेहि य इच्छतिसाडित्तए वा पाडित्तए वा गालित्तए वा विद्धंसित्तए वा, नो चेव णं से गब्भे सडति वा पडति वा गलति वा विद्धंसति वा । तते णं सा चिल्लणा देवी तं गब्भं जाहे नो संचाएति वहूहिंगब्भसाडएहिय जाव गब्भपाड( विद्धंस )णेहि य साडित्तए वा जाव विद्धंसित्तए वा, ताहे संता तंता परितंता निव्विन्ना समाणा अकामिया अवसवसा अट्टवसट्टदुहट्टा तं गब्भं परिवहति । तते णं सा चिल्लणा देवी

---

दक्षिणवामपार्श्वे भवतः, एवं विदिशावपि । 'अयमेयारूवे' अब्भत्थिए चिंतिए पत्थिए मणोगए संकप्पे समुप्पज्जित्था । सातनं पातनं गालनं विध्वंसनमिति कर्तुं संप्रधारयति, उदरान्तर्वर्तिनः ओषधैः सातनम्–उदराद्बहिष्करणं, पातनं–गालन रुधिरादितया कृत्वा, विध्वंसनं सर्वगर्भपरिशाटनेन, न च शाटनाद्यवस्था अस्य भवन्ति । 'संता तंत. परितंता' इत्येकार्थाः खेदवाचका एते ध्वनयः । 'अट्टवसट्टदुहट्टा' ( आर्त्तवशा–आर्त्तध्यानवशतामृता–गता दुःखार्त्ता च या सा ) उच्चाभिराक्रोशनाभिः

नवण्हं मासाणं बहुपाडपुण्णाणं जाव सोमालं सुरूवं दारयं पयाया। तते णं तीसे चेल्लणाए देवीए इमे एतारुवे जाव समुप्पज्जित्था–जइ ताव इमेणं दारएणं गब्भगएणं चेव पिउणो उदरवलिमंसाइं खाइयाइं, तं न नज्जइ णं एस दारए संवड्ढमाणे अम्हं कुलस्स अंतकरे भविस्सति, तं सेयं खलु अम्हं एयं दारगं एगंते उकुरुडियाए उज्झावित्तए एवं संपेहेति २ दासचेडिं सद्दावेति २ एवं वयासी–गच्छह णं तुमं देवाणुप्पिए एयं दारगं एगंते उकुरुडियाए उज्झाहि। तते णं सा दासचेडी चेल्लणाए देवीए एवं वुत्ता समाणी करतल० जाव कट्टु चिल्लणाए देवीए एतमट्ठं विणएणं पडिसुणेति २ तं दारगं करतलपुडेणं गिण्हति, जेणेव असोगवणिया तेणेव उवा० २ तं दारगं एगंते उकुरुडियाए उज्झाति। तते णं तेणं दारएणं एगंते उकुरुडियाए उज्झितेणं समाणेणं सा असोगवणिया उज्जोविता यावि होत्था। तते णं से सेणिए राया इमीसे कहाए लद्धट्ठे समाणे जेणेव असोगवणिया तेणेव उवा० २ तं दारगं एगंते उकुरुडियाए उज्झियं पासेति २ आसुरुत्ते जाव मिसिमिसेमाणे तं दारगं करतलपुडेणं गिण्हति २ जेणेव चिल्लणा देवी तेणेव उवा० चेल्लणं देविं उच्चावयाहिं आओसणाहिं आओसति २ उच्चावयाहिं निब्भच्छणाहिं निब्भच्छेति २ एवं उद्धंसणाहिं उद्धंसेति २ एवं वयासी–किस्स णं तुमं मम पुत्तं एगंते उकुरुडियाए उज्झावेसि त्तिकट्टु चेल्लणं देविं उच्चावयसवहसावितं करेति २ एवं वयासी–तुमं णं देवाणुप्पिए! एयं दारगं अणुपुव्वेणं सारक्खमाणी संगोवेमाणी संवड्ढेहि। तते णं सा चेल्लणा देवी सेणिएणं रन्ना एवं वुत्ता समाणी लज्जिया विलिया विड्डा करतलपरिग्गहियं सेणियस्स रन्नो विणएणं एयमट्ठं पडिसुणेति २ तं दारगं अणुपुव्वेणं सारक्खमाणी संगोवेमाणी संवड्ढेति। तते णं तस्स दारगस्स एगंते

---

१आक्रोशो निर्भर्त्सना उद्धर्षणा (एते समानार्थाः)। 'लज्जिया विलिया' (एतेऽपि समानार्थाः)।

उक्कुरुडियाए उज्झिज्जमाणस्स अगंगुलियाए कुक्कुडपिच्छएणं दूमिया यावि होत्था, अभिक्खणं अभिक्खणं पूयं च सोणियं च अभिनिस्सवेति । तते णं से दारए वेदणाभिभूए समाणे महता महता सद्देणं आरसति । तते णं सेणिए राया तस्स दारगस्स आरसितसद्दे सोचा निसम्म जेणेव से दारए तेणेव उवा० २ तं दारगं करतलपुडेण गिण्हइ २ तं अगंगुलियं आसयंसि पक्खिवति २ पूइं च सोणियं च आसएणं आमुसति । तते णं से दारए निव्वुए निव्वेदणे तुसिणीए संचिट्ठइ, जाहे वि य णं से दारए वेदणाए अभिभूते समाणे महता महता सद्देणं आरसति ताहे वि य णं सेणिए राया जेणेव से दारए तेणेव उवा० २ तं दारगं करतलपुडेणं गिण्हति तं चेव जाव निव्वेयणे तुसिणीए संचिट्ठइ । तते णं तस्स दारगस्स अम्मापियरो ततिए दिवसे चंदसूरदंसणियं करेति जाव संपत्ते बारसाहे दिवसे अयमेयारूवं गुणनिप्फन्नं नामधिज्जं करेति, जहा णं अम्हं इमस्स दारगस्स एगंते उक्कुरुडियाए उज्झिज्जमाणस्स अंगुलिया कुक्कुडपिच्छएणं दूमिया, तं होउ णं अम्हं इमस्स दारगस्स नामधेज्जं कूणिए । तते णं तस्स दारगस्स अम्मापियरो नामधिज्जं करेति कूणिय त्ति । तते णं तस्स कूणियस्स आणुपुव्वेणं ठितिवडियं च जहा मेहस्स जाव उप्पिं पासायवरगए विहरति । अट्ठओ दाओ । तते णं तस्स कूणियस्स कुमारस्स अन्नदा पुव्वरत्ता० जाव समुप्पज्जित्था—एवं खलु अहं सेणियस्स रन्नो वाघाएणं नो संचाएमि सयमेव रज्जसिरिं करेमाणे पालेमाणे विहरित्तए, तं सेयं मम खलु सेणियं रायं नियलबंधणं करेत्ता अप्पाणं महता महता रायभिसेएणं अभिसिंचावित्तए त्तिकट्टु एवं संपेहेति २ सेणियस्स रन्नो अंतराणि य छिड्डाणि य विरहाणि य पडिजागरमाणे विहरति । तते णं से कूणिए कुमारे सेणियस्स रन्नो

---

स्थितिपतितां—कुलक्रमायातं पुत्रजन्मानुष्ठानम् । 'अंतराणि य' अवसरान्, छिद्राणि—अल्पपरिवारादीनि, विरहो—विजनत्वम् ।

अंतरं वा जाव मम्मं वा अलभमाणे अन्नदा कयाइ कालादीए दस कुमारे नियघरे सद्दावेति २ एवं वदासि-एवं खलु देवाणुप्पिया! अम्हे सेणियस्स रन्नो वाघाएणं नो संचाएमो सयमेव रज्जसिरिं करेमाणा पालेमाणा विहरित्तए, तं सेयं देवाणुप्पिया! अम्हं सेणियं रायं नियलबंधणं करेत्ता रज्जं च रट्ठं च बलं च वाहणं च कोसं च कोट्ठागारं च जणवयं च एक्कारसभाए विरिंचित्ता सयमेव रज्जसिरिं करेमाणाणं पालेमाणाणं जाव विहरित्तए। तते णं ते कालादीया दस कुमारा कूणियस्स कुमारस्स एयमट्ठं विणएणं पडिसुणेंति। तते णं से कूणिए कुमारे अन्नदा कदाइ सेणियस्स रन्नो अंतरं जाणति २ सेणियं रायं नियलबंधणं करेति २ अप्पाणं महता महता रायाभिसेएणं अभिसिंचावेति। तते णं से कूणिए कुमारे राजा जाते महता महता०। तते णं से कूणिए राया अन्नदा कदाइ ण्हाए जाव सव्वालंकारविभूसिए चेल्लणाए देवीए पायवंदए हव्वमागच्छति। तते णं से कूणिए राया चेल्लणं देविं ओहय० जाव झियायमाणिं पासति २ चेल्लणाए देवीए पायग्गहणं करेति २ चेल्लणं देविं एवं वदासि-किं णं अम्मो! तुम्हं न तुट्ठी वा न ऊसए वा न हरिसे वा नाणंदे वा? जं णं अहं सयमेव रज्जसिरिं जाव विहरामि। तते णं सा चेल्लणा देवी कूणियं रायं एवं वयासि-कहण्णं पुत्ता! ममं तुट्ठी वा उस्सए वा हरिसे वा आणंदे वा भविस्सति? जं नं तुमं सेणियं रायं पियं देवयं गुरुजणगं अच्चंतनेहाणुरागरत्तं नियलबंधणं करित्ता अप्पाणं महता रायाभिसेएणं अभिसिंचावेसि। तते णं से कूणिए राया चिल्लणं देविं एवं वदासि-घातेउकामे णं अम्मो! मम सेणिए राया, एवं मारेतुं बंधितुं निच्छुभिउकामए णं अम्मो! ममं सेणिए राया, तं कहन्नं अम्मो ममं सेणिए

---

तुष्टिः उत्सवः हर्षः आनन्दः प्रमोदार्था एते शब्दाः। 'मम घातेउकामे णं' घातयितुकामः णं वाक्यालङ्कारे मां श्रेणिको राजा 'घातनं मारणं बन्धनं निच्छुभणं' एते पराभवसूचका ध्वनयः।

राया अच्चंतनेहाणुरागरत्ते ? तते णं सा चेल्लणा देवी कूणियं कुमारं एवं वदासि-एवं खलु पुत्ता ! तुमंसि ममं गब्भे आभूते समाणे तिण्हं मासाणं बहुपडिपुन्नाणं ममं अयमेयारूवे दोहले पाउब्भूते-धन्नातो णं तातो अम्मयातो जाव अंगपडिचारियाओ निरवसेसं भाणियव्वं जाव जाहे वि य णं तुमं वेयणाए अभिभूते महता जाव तुसिणीए संचिट्ठसि एवं खलु तव पुत्ता ! सेणिए राया अच्चंतनेहाणुरागरत्ते। तते णं से कूणिए राया चेल्लणाए देवीए अंतिए एयमट्ठं सोच्चा निसम्म चिल्लणं देविं एवं वदासि-दुट्ठुं णं अम्मो ! मए कयं, सेणियं रायं पियं देवयं गुरुजणगं अच्चंतनेहाणुरागरत्तं नियलबंधणं करंतेणं, तं गच्छामि णं सेणियस्स रन्नो सयमेव नियलानि छिंदामि त्तिकट्टु परसुहत्थगते जेणेव चारगसाला तेणेव पहारित्थ गमणाए। तते णं सेणिए राया कूणियं कुमारं परसुहत्थगयं एज्जमाणं पासति २ एवं वयासि-एस णं कूणिए कुमारे अपत्थियपत्थिए जाव सिरिहिरिपरिवज्जिए परसुहत्थगए इह हव्वमागच्छति, तं न नज्जइ णं ममं केणइ कुमारेणं मारिस्सतीतिकट्टु भीए जाव संजायभए तालपुडगं विसं आसगंसि पक्खिवइ। तते णं से सेणिए राया तालपुडगविसं आसगंसि पक्खित्ते समाणे मुहुत्तंतरेणं परिणाममाणंसि निप्पाणे निच्चिट्ठे जीवविप्पजढे ओइन्ने। तते णं से कूणिए कुमारे जेणेव चारगसाला तेणेव उवागए २ सेणियं रायं निप्पाणं निच्चिट्ठं जीवविप्पजढं ओइन्नं पासति २ महता पितिसोएणं अप्फुण्णे समाणे परसुनियत्ते विव चंपगवरपादवे धस त्ति धरणीतलंसि सव्वंगेहिं संनिवडिए। तते णं से कूणिए कुमारे मुहुत्तंतरेणं

निष्प्राणः—निर्गतप्राणः, निश्चेष्टः जीवितविप्रजढः प्राणापहारसूचका एते। अवतीर्णो—भूमौ पतितः। 'अप्फुण्णे' व्याप्तः सन्।

आसत्थे समाणे रोयमाणे, कंदमाणे, सोयमाणे, विलवमाणे एवं वदासि—अहो णं मए अधन्नेणं अपुन्नेणं अकयपुन्नेणं दुट्ठुकयं सेणियं रायं पियं देवयं अच्चंतनेहाणुरागरत्तं नियलबंधणं करंतेणं मम मूलागं चेव णं सेणिए राया कालगते त्ति कट्टु ईसरतलवर जाव संधिवालसद्धिं संपरिवुडे रोयमाणे ३ महया इड्ढिसक्कारसमुदएणं सेणियस्स रन्नो नीहरणं करेति, बहूइं लोइयाइं मयकिच्चाइं करेति। तते णं से कूणिए कुमारे एतेणं महया मणोमाणसिएणं दुक्खेणं अभिभूते समाणे अन्नदा कदाइ अंतेउरपरियालसंपरिवुडे सभंडमत्तोवकरणमाताए रायगिहातो पडिनिक्खमति, जेणेव चंपा नगरी तेणेव उवागच्छइ, तत्थ वि णं विपुलभोगसमितिसमन्नागए, काले णं अप्पसोए जाए यावि होत्था। ततेणं से कूणिए राया अन्नया कयाइ कालादीए दस कुमारे सद्दावेति २ रज्जं च जाव जणवयं च एक्कारसभाए विरिंचति २ सयमेव रज्जसिरिं करेमाणे पालेमाणे विहरति। तत्थ णं चंपाए नगरीए सेणियस्स रन्नो पुत्ते चेल्लणाए देवीए अत्तए कूणियस्स रन्नो सहोयरे कणीयसे भाया वेहल्ले नामं कुमारे होत्था सोमाले जाव सुरूवे। ततेणं तस्स वेहल्लस्स कुमारस्स सेणिएण रन्ना जीवंतएणं चेव सेयणए गंधहत्थी अट्ठारसवंके हारे पुव्वदिन्ने। तए णं से वेहल्ले कुमारे सेयणएणं गंधहत्थिणा अंतेउरपरियालसंपरिवुडे चंपं नगरिं मज्झं मज्झेणं निग्गच्छइ २ अभिक्खणं २ गंगं महानइं मज्जणयं ओयरइ। ततेणं सेयणए गंधहत्थी देवीओ

---

'रोयमाणे त्ति' रुदन् 'कंदमाणे' वैक्लव्यं कुर्वन् 'सोयमाणे' शोकं कुर्वन् 'विलवमाणे' विलापान् कुर्वन्। 'नीहरणं' ति परोक्षस्य यन्निर्गमादि कार्यम्। 'मणोमाणसिएणं' ति मनसि जातं मानसिकं मनस्येव यद्वर्तते वचनेनाप्रकाशितत्वात् तत् मनोमानसिकं तेन अवहिर्वर्तिना अभिभूतः। 'अंतेउरपरियालसंपरिवुडे'। चंपं नगरिं मज्झं मज्झेणं' इत्यादि वाच्यम्।

